दूरध्वनि – "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आं. प्र.) भारतम्.

संपुटः १२ | 15 th AUGUST 1974 | क्रमांकः ७

नवदेहल्यां अस्मत्सभाकेन्द्रम्

श्री के. यस्. रावः, अस्मद्देहली प्रचारकः,
तद्दक्षिणभागे श्रीवत्सबालमन्दिर संस्थापकः श्री चक्रदेवः

आनन्द-श्रावणाङ्कः | शकाब्दाः १८९६ | मूल्यम् ०–५० पैसाः

# विषयसूची

# दैवीवाक्

अग्ने यं यज्ञ मध्वरं विश्वतः परिभूरसि ।

स इद्देवेषु गच्छति ॥

हे अग्ने! त्वं यं यज्ञं विश्वतः सर्वासुदिक्षु, परिभूः परितः प्राप्तवानसि, स इन् = स एव यज्ञो देवेषु तृप्तिं प्रणेतुं स्वर्गे गच्छति । कीदृशं यज्ञं ? अध्वरं = हिंसारहितं । न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति ।

अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः ।

देवो देवेभि रागमत् ॥

अय मग्निर्देवो देवेभिः = अन्यैर्देवैः हविर्भोजिभिः सह आगमत् = अस्मिन् यज्ञे समागच्छतु । कीदृशोऽग्निः ? होता = होमनिष्पादकः, कविक्रतुः = कविशब्दः क्रान्तवाची, क्रतुकर्म वा प्रज्ञानं वाऽभिधत्ते । अतः क्रान्तप्रज्ञः क्रान्तकर्मा वा । सत्यः=अनृतरहितः; फलमवश्यं प्रयच्छतीत्यर्थः । चित्रश्रवस्तमः = श्रूयते इति श्रवः कीर्तिः, अतिशयेन विविधकीर्तियुक्तः ।

# सम्पादकीयम्

## आकाशवाण्यां अमरवाणिः

महदिदं प्रमोदस्थानं, यत्केन्द्राधिकारिनिर्देशात् १९७४ जून् ३० तिथितः आरभ्य प्रातः नवघण्टा समये पञ्चनिमेषपर्यन्तं आकाशवाण्यां प्रतिदिनं वार्ताः पठ्यन्ते। एतस्मिन् वार्ताश्रवणे, संस्कृतज्ञा न केवलं, किन्तु अनभिज्ञा अपि समुत्सुका वर्तन्त इति सुविदितमेवैतत्। सर्वेषामपि मनोरञ्जने गैर्वाण्याः तादृशी शक्तिरस्तीति सुनिरूपितमासीत्। प्रशंसापत्राणि देशस्य कोणकोणेभ्य अतितरामापतन्ति च। सर्वोऽपि जनः अर्थावगतिं प्राप्नुवन्तीति कथने न काप्यतिशयोक्तिः। एतत्कार्यक्रमनिर्देशकतॄन्वयं बहुधा अभिनन्दामः। संस्कृतस्य इतोधिकाऽत्यन्तव्याप्तेरयं कार्यक्रमः मुख्यं साधनञ्च भवतीति वक्तुं शक्यते। रात्रावपि, संस्कृतवार्ता प्रसारः करणीय इति प्रभुताभ्यर्थयामः।

आकाशवाण्यां गैर्वाणवाण्याः प्रसारः जातीयतैक्यकरणे महान्तमुपकारमातनोतीति निश्चिप्रचमेव। स्वातन्त्र्यसंपादनानन्तरमस्मत्प्रभुतया संस्कृतस्य व्याप्त्यै बहुधा श्रद्धा आधीयते। किन्तु एतन्नालमिति मन्यामहे। प्रतिविद्यालयं एकः संस्कृतोपाध्यायः निवेशनीयः। सर्वेषाऽमपि विद्यार्थिनां संस्कृतमवश्यपठनीयत्वेन निर्णयः कार्यः। संस्कृतोपाध्यायानां किञ्चिदधिकतया वेतनादिषु आधिक्यं प्रदर्शनीयम्। विना जातिमतभेदं संस्कृताभ्यासकानां विद्यार्थिनां उचितभोजनप्रदानं न केवलं, अपितु उपकारवेतनादिकमपि दीयेत, तदा क्षिप्रमितोधिकां व्याप्तिं संस्कृतं प्राप्नुयादिति विज्ञाप्यते।

आकाशे "उत्पन्नश्शब्दः आकाशे विनष्ट" इति, न्यायस्य दूरीभवन्नयं आकाशवाण्यां संस्कृते वार्ताप्रसारः इतोऽप्यधिकं समयं प्राप्नुवन् चिरं विलसतु इति प्रार्थयामः। ***

# दशावतारस्तोत्रम्

श्री डा. वेमूरि आंजनेयशर्मा.

**मीन - प्रहर्षिणी**

हृत्वा तन्निगमधनं विधेः सकाशा-
दंभोधिं गतमसुराधमं निहन्तुं;
मीनोऽभूर्गुरुकृपयाऽभयप्रदायिन्
रूपं तत् तव कलयामि सर्वरूप ॥

**कूर्म - मंजुभाषिणी**

विभवेप्सया सुरगणैः पयोनिधौ
मथितेतु मंदरगिरौ निमज्जति ।
वरकूर्मरूपमुपगम्यशैलमु-
द्धृतवांस्त्वमीशतदहं स्मरामि ते ॥

**वराह - द्रुतविलंबितम्**

सकलजीवधरामवनिं पुरा
जलनिधौ विनिपातितुमुद्यतम् ।
तमसुरं कनकाक्षमहन् भवान्
वरवराहशरीर नमोऽस्तु ते ॥

**नरकेसरि - हरिणी**

दितिजतनयः प्रह्लादस्ते प्रपन्नगणाग्रणीः
त्वयि समधिकाद् वैरात् पित्रा भृशं खलु पीडितः ।
निजजनपरित्राणायाभूद् भवान् नरकेसरी
कनककशिपुं हंतुं च त्वा महं हृदि भावये ॥

**त्रिविक्रम - पुष्पिताग्रा**

सकलसुरगणान् विजित्य नाकं
समधिगतस्य बलेर्विलंभगर्वम् ।
परिशिथिलयितुं त्रिविक्रमोऽभूः
तमज, भजे तव वामनावतारम् ॥

**वीरविप्रानुष्टुम्**

जमदग्निसुतो भूत्वा क्षत्रियान् पितृघातुकान् ।
जघान यः परशुना वीरविप्रं नमामि तम् ॥

**रामवसंततिलकम्**

आपूरिता दशरथेश्वर पुत्रकाम्या
यस्योदयेन, निहतो दशकंधरोऽपि ।
लीलातिरोहित निजप्रतिभं परेशम्
तं दिव्यतैकनिलयं कलयामि रामम् ॥

**कृष्णानुष्टुम्**

निराकारं परं ब्रह्म नराकारमवाप यम् ।
गीतामृतं येन दुग्धं कृष्णाख्यं तं नमाम्यहम् ॥

**गौतम - पृथ्वी**

अपारकरुणोदयं निखिलचेतनव्रातके
प्रसन्नघनतेजसं विमलतालसन्मानसम् ।
प्रशांतिविभवास्पदं स्वगतसच्चिदानंदनम्
ऋषिप्रभुमनारतं मनसि भावये गौतम् ॥

**कल्क्यनुष्टुम्**

शिक्षार्थं धर्मबाह्यानां सुजनान् परिरक्षितुं ।
धर्तासि कल्किरूपं ते भावये तत् परात्पर ॥

# गजेन्द्रमोक्षणकथा

'बोधकरत्नम्', 'रामायणज्योति', 'उपन्यासचक्रवर्ती'
**मु. वि. श्रीनिवासाचार्यः, अवलूर्.**

पुरा द्राविडान्तर्गते पाण्डच-देशे इन्द्रद्युम्नः इति राजा बभूव। सः प्रजापालनतत्परः नित्यनैमित्तिककर्मानुष्ठानधुरंधरः, भगवद्भागवतभक्तिमान्, भगवदाराधनबद्धश्रद्धः, सर्वशास्त्रविचक्षणश्च आसीत् । अथ कदाचित् कस्मिश्चित् दिने पूजागृहं आगत्य भगवत्येकाग्रचित्तः गृहीतमौनव्रतः पूजां कृत्वा हरिमेव ध्यायन्नास्त । तस्मिन्नवसरे देवर्षिः नारदः भूलोके संचरन् अन्ततः राज्ञः इन्द्रद्युम्नस्य पूजागृहं आगच्छत् । तत्र क्षणमिव स्थित्वा पूजागृहे भगवध्यानमग्नं राजानं दृष्ट्वा स्वमनसि तं विष्णुभक्तं प्रशंसन् तूष्णीं अतिष्ठत् । मुहूर्तकालं स्थितः नारदः तस्मात् स्वागतनिवेदनं अपेक्षमाणः शनैश्शनैः "हे राजन्, इन्द्रद्युम्न" इति आह्वानध्वनिं अदात् । ध्यानमग्नः राजा तु नारदागमनं तस्याह्वानचेष्टां च नावुधत् । कोपाविष्टः मुनिवरः "गजो भूत्वा वने संचर" इत्यशपत् । तच्छापमपि राजा नाशृणोत् । शापं तस्मै निवेद्यैव गन्तव्यमिति मन्वानः मुनिः तत्रैव चिरं तूष्णीं अवर्तत । अथ राजा यदा ध्यानं परिसमाप्य उन्मीलितलोचनः इतस्ततः पश्यति तदा मुनिपुंगवं दृष्ट्वा विनीतवेषः साष्टांगप्रणामकरणोद्युक्त आसीत् । तमवलोक्य मुनिः "रे मूर्ख, किमिति तव प्रणामः? भागवतापचारः कृतः त्वया "आराधनानां सर्वेषां विष्णोराराधनं परम् । तस्मात् परतरं प्रोक्तं तदीयाराधनं परम्" इति सकलशास्त्रज्ञेन त्वया कथं न ज्ञायते ? प्रथमतः त्वया क्रिय-

माणं आराधनं भगवद्ध्यानं च प्रशंसन् आसम्। मुहूर्तकालं स्थित्वापि ममाऽगमनं मम ध्वनिं च त्वं तु न ज्ञातवान्। अथ भागवतापचारयुक्तं त्वां "गजो भव, वने संचर" इत्यशपम्। तदपि त्वया न ज्ञातम्। साक्षात् शापं निवेद्य गन्तव्यमिति तव बहिश्चिन्तां प्रतीक्ष्य तिष्ठामि "शापमनुभव" इति राजानं अवोचत्। राजा इन्द्रद्युम्नः तच्छापं शिरसा अंगीकृत्य महामुनिं अगस्त्यं इत्थं प्राह च – "प्रभो, भागवतापचारस्य फलं तु मया अनुभोक्तव्यमेव, किन्तु गजरूपग्रहणानन्तरमपि भगवदाराधनचिन्ता मन्मनसि नित्यं भवतु इति भवन्तः अनुगृह्णन्तु" इति। तादृशीं राज्ञः प्रार्थनां अंगीकृत्य 'तथा भवतु इत्युक्त्वा मुनिश्श्रेष्ठः कुंभसंभवः' यथागतं अगात्। झटिति राजापि गजरूपं प्राप्य वने संचरति स्म। प्रतिदिनं स गजः यत्रकुत्रापि तटागात् पंकजपुष्पं गृहीत्वा वनात् ग्रामं वा नगरं वा आगत्य यत्र विष्णवालयः वर्तते, तत्र स्थित्वा शब्दं कृत्वा तिष्ठति स्म। तच्छब्दं श्रुत्वा अर्चकः बहिः आगम्य पश्यति, तदा गजः शुण्डेन गृहीतं तामरसपुष्पं तस्य हस्ते दत्वा भगवदर्पणं कुरुत इति संज्ञां करोति स्म। अर्चकश्च तत्पुष्पं भगवतः चरणारविन्दयोः समर्प्य पुनः तत् कुसुमं गजाय यच्छति स्म। अनन्तरमेव गजः यथागतं गत्वा स्वाऽभ्यवहारं करोति स्म। इत्थं तस्य गजस्य गतिः चलति स्म। अनेन रीत्या बहवो संवत्सराः गताः। अन्ते गजशापविमोचनकालः आगतः। भूलोके अनावृष्टिः समजायत। तेन कारणेननद-नदी-कासारतटाकाःजलरहिता अभवन्। गजस्तु इतस्ततः कमलपुष्पहरणाय जलाशयान् विचिनोति स्म। जलरहितान् बहून् कासारान् तटागान् वीक्ष्य किंकर्तव्यतामूढहृदयः हस्ती स्वमनसि इत्थं अचिन्तयत्– अद्यास्मिन् दिने भगवदाराधनं विना कथं मम आहारः गृहीतव्यः तामरसपुष्पं विना भग-

वदाराधनं कथं कर्तुं शक्यं, तेन हि मम मरणमेव भविष्यति" इति। विचिन्त्यैवं वने परिभ्रमन् अन्ततः कस्मिश्चित् पादपमूलं आगत्य श्रमपरिहारं करोति स्म। तदानीं आकाशे केचन पक्षिणः डयमाना आसन्। तेषां पक्षेभ्यः तेषां चलनेन जलबिन्दवः गजमस्तके कतिचन अपतन्। जलबिन्दूनां शैत्यस्पर्शात् वारणराजः, दूरे कोपि जलाशयः वर्तते इति द्योतते इति मत्वा तरुमूलात् तत्राजगाम। तत्र आश्चर्यभूतं अतिमनोहरं कमलपुष्पभरितं अगाधं जलाशयं तटागं दृष्ट्वा परमानन्दपूर्णः जले अवतीर्य पुष्पाणि अवचिनोति स्म। तदानीं तत्र वर्तमानः ग्राहः गजस्य पादमेकं स्वदन्तैः गृहीत्वा दष्ट्वा खादति स्म। गजस्तु सन्तोषाधिक्यात् तन्न ज्ञातवान्।

पुष्पाणि लतया बद्धवा तानि गृहीत्वा मस्तके निक्षिप्य यदा तीरं गन्तुं उपरि पदानि निक्षेप्तुमारभत तदा जलाशयात् उपरि आगन्तुं न शशाक। गजः यथाशक्ति उद्युक्तोपि मकरबलं अधिकऽमासीत्। नक्रदशनपीडाधिक्यात् स्वपादव्रणं असहमानः हस्ती उच्चैः अक्रन्दत्। गजरोदनशब्दं श्रुत्वा वनगजाः बहवः तं उद्धर्तुं तत्र आगमन्। सर्वेपि गजाः तटागे ग्राहेण पीडितपादं वारणं स्वशुण्डैः गृहीत्वा आकर्षन्ति स्म। तथापि ग्राहस्य बलं अधिकमेवासीत्। तदा पीडितगजः स्वजीवनाशां परित्यज्य इन्द्रब्रह्मरुद्रादीन् देवान् आह्वयति स्म। तेपि गजसमीपं आगमन्। तान् दृष्ट्वा गजराजः इत्थम् प्रार्थयामास "भो देवाः मम तु स्थले सिंहमयं जले मकरमयं च वर्तते। तस्मात् भयरहितं नित्यं शरीरं मह्यं दत्वा अनुगृह्णन्तु इति। विष्णुं नारायणं विना सर्वेपि देवाः "नित्यशरीरप्राप्तिं विना अन्यं वरं वृणीष्व। नित्यशरीरदाने वयं न समर्थाः" इति प्रत्यब्रुवन्। तदा गजः तादृशीं देववार्तां श्रुत्वा, आस्तां तावत् तेषां

शक्तिः, अमीषां देवानां नियन्ता कश्चित् नूनं वर्तते तस्य नाम किमिति न ज्ञायते। तथापि इत्थं संबोधनं कृत्वा आह्वयामीति मनसि विचिन्त्य आदिमूल! इति उच्चैः आक्रोशत्। पर-व्यूह-विभव-अर्चा-अन्तर्यामी स्वरूपः श्रीमन्नारायणः गरुडारूढः तत्रागत्य सुदर्शनचक्रायुधेन मकरं कृन्द्वा गजं अरक्षत्। शंख-चक्र-धारिणं चतुर्भुजयुक्तं पक्षिराजारूढं भगवन्तं विष्णुं नारायणं दृष्ट्वा "प्रभो आदिमूल! नित्य-शरीरं दत्वा मां पाहीऽत्यवदत्। तथा कृत्वा तं गजराजं भगवान् ररक्ष। तदैव चक्रस्पर्शप्रभावात् नक्रश्च स्वकं रूपं परित्यक्तः हूहूनाम गन्धर्वो भूत्वा भगवन्तं प्रदक्षिणीकृत्य पूर्वं प्राप्तशापात् विमुक्तः गन्धर्वलोकं अगात्। भागवतपादस्पर्शप्रभावः पाप-शापविमोचनहेतुरिति ज्ञायते ननु? उक्तम् च–

आराधनानां सर्वेषां
विष्णोराराधनं परं।
तस्मात् परतरं प्रोक्तं
तदीयाराधनं परम्॥

नक्राक्रान्ते करीन्द्रे मुकुलितनयने
मूलमूलेति खिन्ने
नाहं नाहं नचाहं न च
भवति पुनस्तादृशोमादृशेषु
इत्येवं त्यक्त हस्ते सपदि
सुरगणे भावशून्ये समस्ते
मूलं यत्प्रादुरासीत् स दिशतु
भगवान् मंगलं सततं नः॥

# श्रीरामवर्णमालास्तवः

अन्तस्समस्तजगतां यदनुप्रविष्टं
आचक्षते मणिगणेष्विव सूत्रमार्याः ।
तं केलिकल्पितरघूद्वहरूपमाद्यं
पङ्केरुहाक्षमनिशं शरणं प्रपद्ये ।।

आम्नायशैलशिखरैकनिकेतनाय
वाल्मीकिवाग्जलनिधिप्रतिबिम्बिताय ।
कालाम्बुदाय करुणारसमेदुराय
कस्मैचिदस्तु मम कार्मुकिणे प्रणामः ।।

इन्दुं प्रसादमवतंसयता त्वदीयं
कोपं करे हुतवहं वहता करेण ।
शङ्के जगत्रयमनुग्रहनिग्रहाभ्यां
संयोज्यते रघुपते समयान्तरेषु ।।

ईदृग्विधस्त्वमिति वेद न सोऽपि वेदः
शक्नोति कस्स्थितमवेक्षितुमुत्तमाङ्गे ।
श्रोतुं क्षमं न तु मृषेक्षितुमप्यतस्त्वां
सर्वे विदन्तु कथमीश कथं स्तुवन्तु ।।

उष्णांशुबिम्बमुदधिस्मयघस्मरास्त्र-
ग्रावा च तुल्यमजनिष्ट गृहं यथा ते ।
वाल्मीकिवागपि मदुक्तिरपि प्रभुं त्वां
देव प्रशंसति तथा यदि कोऽत्र दोषः ।।

ऊढः पुराऽसि विनतान्वयसम्भवेन
देव त्वया किमधुनाऽपि तथा न भाव्यम् ।
पूर्वे जना मम विनेमुरसंशयं त्वां
जानासि राघव तदन्वयसम्भवं माम् ॥

ऋक्षं प्लवङ्गमपि रक्षसि चेन्महात्मन्
विप्रेषु किं पुनरथाऽपि न विश्वसामः ।
अत्राऽपराध्यति किल प्रथमद्वितीयौ
वर्णौ तवौदनतया निगमो विवृण्वन् ॥

नृणां न केवलमसि त्रिदिवौकसां च
राजा यमार्कमरुतोऽपि यतस्त्रसन्ति ।
दीनस्य वाङ्मम तथाऽपि तते तव स्यात्
कर्णे रघूद्वह यतः ककुभोऽपि जाताः ॥

क्लृप्तामपि व्यसनिनी भवितव्यतां मे
नाथाऽन्यथा कुरु तव प्रभुतां दिदृक्षे ।
चक्रे शिलाऽपि तरुणी भवता तदास्तां
मायाऽपि यद्घटयते ननु दुर्घटानि ॥

एकं भवन्तमृषयो विदुरद्वितीयं
जानामि कार्मुकमहं तु तव द्वितीयम् ।
श्रुत्याऽऽश्रिता जगति मद्गुणघोषणा सा
दूरीकरोति दुरितानि समाश्रितानाम् ॥

ऐशं शरासमचलोपममिक्षुवल्लि-
भञ्जं बभञ्ज किल यस्तव बाहुदण्डः ।
तस्य त्वशीतकरवंशवतंस शंस
किं दुष्करो भवति मे विधिपाशभङ्गः ॥

ओजस्तव प्रहितशेषविषाग्निदग्धैः
स्पष्टं जगद्भिरुपलभ्य भयाऽऽकुलानाम् ।
गीतोक्तिभिस्त्वयि निरस्य मनुष्यबुद्धिं
देव स्तुत्योऽसि विधिविष्णुवृषध्वजानाम् ॥

औत्कण्ठ्यमस्ति दशकण्ठरिपो ममैकं
द्रक्ष्यामि तावकपदाम्बुरुहं कदेति ।
अप्येति कर्म निखिलं मम यत्र दृष्टे
लीनाश्च यत्र यतिभिस्सह मत्कुलीनाः ॥

अम्भोनिधाववधिमत्यवकीर्य बाणान्
किं लब्धवानसि ननु श्वशुरस्तवाऽयम् ।
दृष्ट्वाऽपनेतुमथवा यदि बाणकण्डूः
देवाऽयमस्त्यनवधिर्मम दैन्यसिन्धुः ॥

अश्रान्तमर्हति तुलाममृतांशुबिम्बं
भग्नाम्बुजद्युतिमदेन भवन्मुखेन ।
अस्मादभूदनल इत्यकृतोक्तिरीशं
सत्या कथं भवतु साधु विवेकभाजाम् ॥

कल्याणमावहतु नः कमलोदरश्रीः
आसन्नवानरभटौघगृहीतशेषः ।
श्लिष्यन्मुनीन्प्रणतदेवशिरःकिरीट-
दाम्नि स्खलन्दशरथात्मज ते कटाक्षः ॥

खं वायुरग्निरुदकं पृथिवी च शब्द-
स्स्पर्शश्च रूपरसगन्धमपि त्वमेव ।
ध्यानाय किन्त्वविदुषां दययात्तबन्धो
धत्से वपुश्शरशरासभृदभ्रनीलम् ॥

गङ्गा पुनाति रघुपुङ्गव यत्प्रसूता
यद्रेणुना च पुपुवे यमिनः कलत्रम् ।
तस्य त्वदङ्घ्रिकमलस्य निषेवया स्यां
पूतो यथा पुनरघेऽपि तथा प्रसीद ॥

घण्टाघणंघणितकोटिशरासनं ते
लुण्टाकमस्तु विपदां मम लोकनाथ ।
जिह्वालतां वहति यद्‌ध्रु जगो रिपूणां
उष्णैरसृग्भिरुदरम्भरिणा शरेण ॥

प्राङस्यवाङसि परेश तथाऽसि तिर्यङ
ब्रूमः किमन्यदखिला अपि जन्तवोऽसि ।
एकक्रमेऽपि कति वा भुवि न भ्रियन्ते
मन्दस्य राघव सहस्व ममाऽपराधान् ॥

चण्डानिलव्यतिकरक्षुभिताम्बुवाह-
दम्भोलिपातमिव दारुणमन्तकालम् ।
स्मृत्वाऽपि सम्भविनमुद्विजते न धन्यो
लब्ध्वा शरण्यमनरण्यकुलेश्वरं त्वाम् ॥

छन्नं निजं कुहनया मृगरूपभाजो
नक्तञ्चरस्य न किमाविरकारि रूपम् ।
त्वत्पत्रिणाऽपि रघुवीर ममाऽद्य माया-
गूढस्वरूपविवृतौ तव कः प्रयासः ॥

जन्तोः किल त्वदभिधाम मणिकर्णिकायां
कर्णे जपन्हरति कश्चन पञ्चकोशान् ।
इत्यामनन्ति रघुवीर ततो भवन्तं
राजाधिराज इति विश्वसिमः कथं वा ॥

(अनुवर्तते)

# अञ्जलिमहिमा

श्री शेषाद्रि अय्यंगार्य:, न्यायाध्यापकः, S. V. O. C. श्रीपदपुरम्.

बद्धाञ्जलिं नतं दृष्ट्वा वितरन् सकलं फलं। योऽतृप्यन् लज्जते देवः नतोऽस्म्यञ्जलिकिंकरम् ।

लोके तावत् अपराधिनां दासानां स्वामिप्रसादने शरणागतेः तुल्यः कोप्यन्यः उपायः नास्ति । अतएव तैत्तरीयब्राह्मणे "तस्माद्वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति" इति वधार्होऽपि प्रपन्नः स्वामिना क्षन्तव्य एवेत्युपदिष्टम् । रक्षणकुशलः दयाळुश्च, यः शत्रुमपि पादयोः पतितं न परित्यजति स इति "स तं निपतितं भूमौ शरण्यः शरणागतं वधार्हमपि काकुत्स्थः कृपया पर्यपालयेत्" इति काकासुरवृत्तान्तकथनावसरे वाल्मीकिनोक्तम् । "अनतिक्रमणीयं हि चरणग्रहणं" इति देशिकाः ।

शरणागतिर्नाम कुपितस्य प्रभोः प्रसादजनकः सुलभः उपायः । स च मनोवाक्कायैः त्रिभिः क्रियमाणः पूर्णः इत्युच्यते । श्रीरामायणे वनं प्रति प्रस्थितस्य भ्रातुः पादयोः पतित्वा लक्ष्मणः शरणागतोऽभूदिति "स भ्रातुश्चरणौ गाढं निपीड्य रघुनन्दनः" इत्यवाचि । विभीषणशरणागति घट्टे "सर्वलोकशरण्याय राघवाय महात्मने । निवेदयत मां क्षिप्रं विभीषणमुपस्थितं" इति वाचा पूर्वं विभीषणः स्वप्रपत्तिं निवेदयति । इति बहूनि उदाहरणयोग्यानि । तत्र कथितः शरणागतिव्यापारः नमस्कारः । स चाञ्चलिरूपः । तत्र "बद्धाञ्जलिपुटाः हृष्टाः नमः इत्येववादिनः" इत्यादिषु तस्य नमः शब्द साहचर्यमपि

प्रतीतम् । तस्य माहात्म्यं सहस्रवदनेनापि दुर्वर्णनमिति प्रतिभाति । मादृशस्य मितंपचस्य तत्प्रतिपादने का शक्तिः? तथा हि ।

अञ्जलिना नरः स्वकीयं प्रेम, भक्ति, कार्तज्ञ्यं, शरणवरणं, आकिञ्चन्यं, दैन्यं, अनन्यगतितां, रक्षापेक्षां, अपराधक्षमायाञ्चां, स्वापकर्षं, परोत्कर्षं, दास्यं इत्यादिकं बहुना वाक्प्रपञ्चेन प्रकटनीयं सर्वं प्रकटयति । यदि वयं कंचन प्रियसुहृदं बहोः कालादनन्तरं पश्येम, तर्हि स्मेरमुखाः साञ्जलिबन्धं कुशलंच्छामः । अधुना पुनः पाश्चात्य संस्कृतौ मुग्धाः नागरिकाः एकहस्तेन प्रणमन्ति । बहोः कालात् पूर्वं आरभ्य महर्षिभिः प्रवर्तितायां भारतीयसंस्कृतौ करद्वयप्रणाम एव आदृतः इति तदाचरणमेवास्माकं समीचीनम् ।

"तौ युतावञ्जलिः पुमान्" इत्यमरकोशे तत्स्वरूपं उपदिष्टम् । प्राचामाचारश्च रामायणादिभिः ज्ञेयः । तत्र "शिरस्यञ्जलिमाधाय कैकेय्यानन्दवर्धनः । बभाषे भरतो ज्येष्ठं" इत्यादिषु भ्रातृ प्रभृतिषु विनयप्रदर्शनावसरे कनिष्ठैः आचरिततया प्रतीयते । देवालयेषु आञ्जनेय वैनतेयादि भक्तानां उत्सवमूर्तयः साञ्जलिमुद्रा एव प्रतिष्ठिताः दृश्यन्ते । देवालयनिर्मातॄणां कृष्णदेवरायादिनृपाणां प्रतिमा अपि तथैव स्तंभेषु शिल्पिभिः निर्मिताः । अतोऽयं प्राचीनः आचार इति अकामैरप्यंगीकार्यम् ।

भगवद्भक्तिपरीवाहभूतेषु स्तुतिनमस्कारकीर्तनार्चनगान - भजनादिषु अञ्जलिरेव पूर्वभावी सुसाध्यो मुख्यश्च । शत्रोः सकाशादपि प्राणरक्षणं अञ्जलिवैभवकृतमिति बहुभिर्वृत्तान्तैरवगम्यते । "बद्धाञ्जलिपुटं दीनं योहन्याद्वैरिणं, तादृशस्य नरकानुभवः जन्मान्तरे, इहजन्मनि साधुसंसदि गर्हणं च भवति । "ब्रह्मघ्ने च सुरापे च स्तेने च गुरुतल्पगे । निष्कृति

विहिता शास्त्रैः कृतघ्ने नाऽस्ति निष्कृतिः" इति कृतोपकार-विस्मरणदोषः पञ्च महापातकानप्यतिशेते । नरः उपकृतवते जनाय अञ्जलिना कृतज्ञतामाविष्कुर्वन् उक्तं दोषमपि अनायासं दूरीकुर्वन् आत्मानं रक्षति।

अञ्जलिमुकुले कराभ्यां धृते सति तत्समानेन तस्मात् अभ्यधिकेन वा अर्हणेन अप्रसन्नोऽपि भगवान् प्रसीदति। अतएव "तेजमान अणिकलनु एँन् कैकूप्पुच्चैऽकैये" इति द्राविड सहस्रगीत्यां शठकोपसूरिः ऊचे । भावस्तु-बाह्याडम्बरभूतैः सुवर्णरत्नादिभूषणैः भूषितो भगवान् न प्रसीदति किन्तु मदीयाञ्जलिबन्धेनैव हृदयपुण्डरीकस्थो हरिः भूषितो मोदते" इति अं=जलयति-दयार्द्रं जलवच्छीतं, प्रसन्नं करोतीति अञ्जलिः । अथवा लडयोरभेदात् अं=जडयति - सर्वज्ञमपि जडं अपराधानभिज्ञं करोतीत्यञ्जलिः । अव रक्षणे इति धातोः अवतीत्यर्थे "अ." इति शब्दः सर्वरक्षणोपयुक्तकारुण्यवात्सल्यादि कल्याणगुणाकरं भगवन्तमभिधत्ते । अतो भगवन्तं नारायणमेव अस्मासु मुग्धं करोति चेत् लौकिकजनप्रसादनेऽस्यांजलेर्महिमा किमु वर्णनीया?

नास्तिकतया श्रद्धाभक्तिहीनो यः पुरुषः जीवन् कदाऽपि बुद्धिपूर्वं भगवन्तं नैव नमोऽकरोत्, सः अन्त्यकाले समीपगतैः प्रयासात् बद्धाञ्जलिः कृतः शरीरं विजहाति चेत् सोऽप्यंजलिः तस्मै निःश्रेयसाय कल्पते इति "माळुमोरिडत्तिलुं वणक्कोडु माळ्वदुत्रलमे" इति द्राविडगीतेन शठकोपमुनिरगायत् । एतदनुसंधाय यामुनाचार्योऽपि स्वकीये स्तोत्ररत्ने "त्वदंघ्रिमुद्दिश्य कदाऽपि केनचिद्यथा तथावापि सकृत्कृतोऽञ्जलिः । तथैवमुष्णात्यशुभान्यशेषतः शुभानि पुष्णाति न जातु हीयते" इति तद्वैभवं व्यशदयत् । अत्र "सर्वेषामेव धर्माणामुत्तमो-वैष्णवो विधिः । रक्षते भगवान्विष्णुः भक्तानात्मशरीरवत्" इति सर्वाधिकत्वेन कथितेभ्यः

सम्मार्जनोपलेपन - मालाकरण-दीपारोपणादि प्रसादनान्तरेभ्यः समधिकं बहुवित्तव्ययायासनिरपेक्षं विवक्षितस्य सुकरं स्वरूपमाहे"ति वेदान्ताचार्य एतच्छ्लोकमवतारयामास ।

एतेनाञ्जलेः कैङ्कर्यरूपपुरुषार्थरूपतया स्वयं आनन्दात्मकतया अत्र स्वरसतः सतां प्रवृत्तिरपि गम्यते । स्वामिप्रीतिजनकस्य तदाज्ञप्तस्य कर्मणः किल लोके कैङ्कर्यपदप्रयोज्यता ।

भागवतापचारमपि अञ्जलिः परिहरति । नान्यः । श्रीरामायणे किष्किन्धाकाण्डे श्रीलक्ष्मणस्य कोपपात्रभूतं सुग्रीवं प्रति हनुमदादेशः "कृतापराधस्य हितेनान्यत्पश्याम्यहं क्षमं । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात्" इति ।

दर्शपूर्णमासादिः स्वर्गसाधनं धर्मः बहुकालव्यवहितफलदायकः । "अञ्जलिः परमा मुद्रा क्षिप्तं देवप्रसादनी" इति तदात्वे एव फलोपधायकतया प्रमणेषूक्तः । कृच्छ्रचान्द्रायणोपवासादिरूपः प्रायश्चित्तधर्मः कस्यचन प्रतिनियतस्यैव पापस्य निवारकः । किंतु सर्वपापप्रतिभूरञ्जलिः । वेदान्तदेशिकः "हस्तीशदुःखविषदिग्धफलानुबन्धिन्याब्रह्मकीटमपराहत संप्रयोगे । दुष्कर्मसञ्चयवशाद्दुरतिक्रमे नः प्रत्यस्त्रमंजलिरसौ तव निग्रहास्त्रे" इत्याह । यदि युद्धे रिपुणा नारायणास्त्रं प्रयुज्यते तदा यद्यंजलिं बद्ध्वा नमस्क्रियते तर्हि तदस्त्रं प्रतिनिवृत्य प्रयोक्तुः इषुधिमधिशेते । एवं आब्रह्मस्तम्बमपरिहार्ये निग्रहसङ्कल्परूपे दुःखफलप्रदे अस्त्रे भगवता प्रयुक्ते प्रायश्चित्तादिकं तत्र प्रत्यस्त्रं न भवितुमर्हति । अपितु अञ्जलिरेव प्रत्यस्त्रं, येन प्रयुक्तेन स्वेरितं निग्रहास्त्रं भगवान्प्रतिसंहरति इति भावः । पराशरभट्टारका अपि सांजलिबन्धं रङ्गनायिकां संसेव्य लज्जयेव किञ्चिदवनतमुखीं देवीमालोक्य "ऐश्वर्यमक्षरगतिं परमं पदं वा, कस्मैचिदंजलिभरं

वहते वितीर्य । अस्मै न किंचिदुचितं कृतमित्यथाम्ब ! त्वं लज्जसे कथय कोऽयमुदारभाव:" इति उत्प्रेक्षते । अल्पमप्यंजलिभारं वहन्तं स्वस्मै प्रत्युपकाररहितं उपकर्तारं च आश्रितं मन्यमाना देवी तस्मै मुक्त्यन्तमैश्वर्यं दत्वा दातव्यस्य अनवशिष्टतया अन्यस्य च दातुमशक्यतया लज्जसे इव दृश्यसे इति भाव: ।

अत: क्रूरे कलौ लब्धजन्मनोऽपि वयं सुलभेनांजलिना भगवन्तं संप्रसाद्य स्वाभीष्टं पूरयितुं समर्था: ।

अञ्जलेर्महिमानन्न-
मितप्रज्ञगोचर: ।
बाधिनिर्देशनयत:
किञ्चिदेव प्रदर्शित: ॥

इति शम् ।

## वर्षाऋतु:

कवि: काव्यतीर्थ ज. व्यं. पल्लेवार: उपाख्य: जयेश:, M.A. LL.B.
पुसद. (महाराष्ट्र)

नृत्यन्ति वर्षागमनात् मयूरा: नर्दन्ति नद्यो नवनीरनर्तै: ।
स्फुटन्ति शीघ्रं नवपल्वलानि नवाम्बुफुल्लानि च पल्वलानि ॥
मदान्धतां गच्छति हस्तियूथम् मदप्रमत्ता वृषभा भवन्ति ।
हसन्ति मुग्धा: हतधीकृषाणा: त्यजन्ति यात्रां पथिका: प्रियोत्का: ॥
क्लिन्नाम्बुधारै: धरणी सुगन्धा तृणाङ्कुरैर्भूषितशाद्वलांगी ।
तटिल्लता ताडित चंचलांगी महेन्द्रचापांकितमोहनीया ॥
चिन्तापहारी खगचातकानाम् चित्तप्रहारी युवतीजनानाम् ।
कामातुरप्रोषितभर्तृकाणाम् संयोगकारी विरहार्तितानाम् ॥
वर्षाऋतुर्वर्षतु वर्षधारा: वर्षा समागच्छतु योग्यकाले ।
वर्षा समागच्छतु सस्यभूमि वर्षा समागच्छतु कर्षके वा ॥

# गणेशकरावलम्बस्तोत्रम्

रचयिता– विद्वान् श्री बालगणपतिभट्टः, श्रीरङ्गपत्तनम्

गंगाधरात्मज गणेश गकारपूज्य
गौर्यङ्गपङ्कृतदेह गजास्य देव ।
गीर्वाणवन्द्य गुहपूर्वज गानलोल
विघ्नाद्रिवज्र मम देहि करावलम्बम् ॥

गर्जाविनिर्जितनिशाचरसंघ देव
गात्रानुलेपितसुगन्ध गिरीशपुत्र ।
गोपार्तिनाशनधुरन्धर गोपपूज्य
विघ्नाद्रिवज्र मम देहि करावलम्बम् ॥

गान्तादिगेश करुणाकर दीनबन्धो
लम्बोदराऽद्रितनयात्मज सुन्दराङ्ग ।
सर्पैकभूषण विभो रदनैकदेव
विघ्नाद्रिवज्र मम देहि करावलम्बम् ॥

पद्मेशपद्मभवपद्मकरार्चिताङ्घ्रे
पापापनोदनविचक्षण पावनाङ्ग ।
पञ्चास्यवाहजननीमुखपद्मबन्धो
विघ्नाद्रिवज्र मम देहि करावलम्बम् ॥

तर्कातिदूरमहिमान्वित तारकारि-
पूर्वोत्थ तूर्णवरदानसुसिद्धहस्त ।
तत्सत्स्वरूप तरुणारुणकान्तिकान्त
विघ्नाद्रिवज्र मम देहि करावलम्बम् ॥

येचेह लब्धजनना: भवसिन्धुमग्ना:
नित्यान्तरायतिमिनक्रझषादिदष्टा: ।
त्वत्पादपोततरणेन नितान्ततुष्टा:
विघ्नाद्रिवज्र मम देहि करावलम्बम् ॥

नीत्वा त्वदीय पदपङ्कजमेव लोका:
निर्विघ्नकार्यकरणे हि भवन्ति दक्षा: ।
नाकेशमुख्य सुरलोक नुतांघ्रिपद्म
विघ्नाद्रिवज्र मम देहि करावलम्बम् ॥

मोक्षप्रदाऽशु नतलोकजनस्य देव
मोदाहृतैककरमोदक मातृभक्त ।
माणिक्यभूषण सुमाणवकस्वरूप
विघ्नाद्रिवज्र मम देहि करावलम्बम् ॥

---

## तपोवनम्, चित्तूरु

चित्पुर्यां तपोवने गतवत्सरे स्थापितायां गौतमीजीवकारुण्य-संस्कृतप्राथमिकपाठशालायां श्रीमलयाळस्वामि संस्कृतोन्नतपाठ-शालायां च आगस्टमासे तृतीयदिने (३-८-७४) संस्कृतदिनोत्सव: श्रीचिदानन्दगिरिस्वामिनां आध्यक्ष्येण प्रचालित: । श्री पि. सुब्ब-राघवशर्मणा संस्कृतस्य प्राशस्त्यं पठनावश्यकतां उद्दिश्य उपन्यास: कृत: । पाठशालाप्रधानोपाध्यायेन धन्यवादा: अध्यक्षस्य उपन्यास-कस्य सभ्यानां च समर्पिता: ।

# संस्कृतदिनोत्सवः

३-८-७४ दिने सायं पञ्चघण्टावादनसमये संस्कृतभाषाप्रचारिणीसभाभवने संस्कृतदिनमधिकृत्य सभा प्रचलिता । मेजर् श्री के. राममूर्तिः (प्रांशुपालः, प्रभुत्वकलाशाला, चित्तूरु) अध्यक्षस्थान मलञ्चकार । सभायाः कार्यदर्शी श्री यन्. रामनाथार्यः दैवप्रार्थनाऽमकरोत् । ततस्स एव अध्यक्षस्य, सभ्यानाञ्च स्वागतं वदन्, एतन्महोत्सवकरणाऽऽवश्यकतां विशदीचकार । अनन्तरं अध्यक्षः श्री के. राममूर्तिः एवमभाषत– "एषा संस्कृतभाषा अतीव प्राचीनतमा । न केवलं भारतीयभाषाणां, अपितु प्रपञ्चे वर्तमानानां सकलानामऽपि भाषाणां मूलभूता वर्तते । विना जातिमतभेदं सर्वैरऽपि एषा भाषा अभ्यसनीया । अभ्यस्तसंस्कृतभाषाणां, यस्यां कस्याञ्चित् शाखायामुद्योगं कुर्वतां प्रत्येकवेतनं (Special Allavance) दातव्यं, तेन संस्कृतव्याप्तिरितोऽप्यधिकतरास्यात्। अस्मिन्विषये संस्कृताभिमानिभिः प्रयत्नः कार्यः" इति ।

अनन्तरं श्री गोपालः (भूतपूर्वतमिलोपाध्यायः) तु "अधुनातनकाले संस्कृताऽभ्यासः सर्वेषा मावश्यकः पाश्चात्या अपि संस्कृताभिमानिनः वर्तन्ते । देशसमैक्यतायाः इयं भाषा अत्यन्तमुपकरोतीत्यवोचत् ।

ततः श्री के. मुनिरेड्डिः (आन्ध्रप्रदेशसाहित्य अकाडमी सभ्यः) संस्कृतस्य अभ्यासे सर्वे अधिकारिण इति संस्कृतभाषा सरला, मनोहरा भारतदेशस्य उन्नतेः कारणमिति संस्कृतभाषायां उपन्यासं चकार ।

अनन्तरं श्री टि. कामेश्वररायः संस्कृतभाषाकवीनां कालिदासप्रभृतीनां कवितामहत्वं प्रोवाच श्री के. सि. जयचन्द्रशास्त्री (सभायाः मानेजरः) संस्कृते संस्कृतस्य वैशिष्टयऽमाबभाषे ।

अन्ततः श्री सुब्बराघवार्यः (स्थानिक - संस्कृतोपाध्यायः) संस्कृतं प्रशंसन् अध्यक्षस्य, सभ्यानाञ्च वन्दनसमर्पणऽमकरोत् ।

एवं कार्यसरण्या सभाऽवसिता । ***

# लोकेऽस्मिन् सर्वकृद्धनम्

श्री ना. व. निगमान्तः, प्रोद्दुटूरु.

सा कृष्णपक्षीया रात्रिः। अञ्जननिभोऽन्धकारः सर्वत्र गाढं लिप्त इव अभासत। नववर्षतृषिता भेकाः आसन्नतटाकवासिनः "बकबकेति भृशं रटन्ति स्म। पामापीडितः कश्चन जरच्छ्वा कुत्रापि कुटीररन्ध्रेशयानः दीनमरोदीत्। नीरन्ध्रान्मेघपुञ्जात् उदकबिन्दवः वायुवशात्तदा तदा भुवि न्यपतन्। शीतवातमुदिता इव झिल्लिका अपि "जुय्म्" शब्दं उत्पादयन्ति स्म। अल्पजनसङ्ख्याकः ग्रामविशेषः सः। चतस्रः वीथिका एव तत्रासन्। परं प्रकृतिसुन्दरः। अष्टघण्टातः पूर्वमेव निश्शब्दोऽभूत् सः संवसथः। उटजभूयिष्ठे तत्र अत्युन्नतं त्रिभूमभासुरं भवनमेकं व्यराजत। नूतनतया आधुनिकपद्धत्या निर्मितं तत् नानाविधैः कृत्रिमवर्णैः चित्रीकृतमभूत्। प्रधानद्वारस्योपरि "सुन्दरमन्दिरम्" इति स्थूलाक्षरैः विलिखितमासीत्। भवनपुरोभागे अधुनातनाः वृक्षाः लताश्च विचित्रैः पुष्पैः निकेतनमिदं द्विगुणितशोभामकार्षुः। सद्मभितः पुरुषोन्नतः प्राकारविशेषः तदलञ्चकार। प्राकारस्य अन्तः एकत्र अतिनवं बहुमूल्यं पाश्चात्यदेशानीतं मोदकरयानं (Motor Car) अलक्ष्यत। प्रधानद्वारि कञ्चुकच्छुरिकाद्यलङ्कृतः कश्चिद् द्वारपालकः नातिविस्तृते पीठे उपविशन्नेव स्वपन्नदृश्यत। चन्द्रशालोपरिष्टात् गृहस्वाम्यवलम्बितराजकीयपक्षध्वजः वायुवेगात् चलन् "पटपटेति" निनदमुत्पादयामास। प्रासादे विशालमेकं शयनगृहम्। तदन्तः सर्वत्र

भित्तिषु वैद्युतिकनाटकीय नटीचित्रपत्राणि, नग्नस्त्रीप्रतिमाश्च नागरिकसूचिकाः संयोजितान्यभवन् । विदेशासादितवर्तिकोत्थापितः सुगन्धः मारुतवशात् सन्निकृष्टं स्थलमपि वासनासहितमकार्षीत् । पीठोपरि स्थापिता आकाशवाणी पाश्चात्यदेशीयं सङ्गीतं मृदु प्रसारयति स्म । अपरत्र कस्मिंश्चन उन्नते पीठे धनिकास्वाद्यः आसवः केषुचन पात्रेषु निक्षिप्तोऽभवत् । अल्पप्रकाशः कश्चित् विद्युद्दीपः कुवलयसमां कान्तिं तत्र प्रकिरन् अभूत् । कट्फलदारुनिर्मितः अतिस्निग्धः विशालः पर्यङ्कः तं स्वापगृहं अलमकार्षीत् । विचित्रास्तरणयुक्तस्य सोपधान शय्यासनाथस्य तस्योपरि शयानः मद्यसेवनालसः वैद्युतिकव्यजनोद्भूतं सुखस्पर्शं शीतवायुं अनुभवन् स्वपाणिपादं दीर्घीकुर्वन् निश्शङ्कं कश्चित् सुप्तोऽदृश्यत । कोसौ ? अहं जाने इमं । एषः आधिकारिकपक्षानुसारी सुन्दरमूर्तिः एम्. एल्. ए. । योऽयं अचिरप्रवर्तिते एलक्षन्समये आधिकारिकपक्षाभ्यर्थित्वं प्रकटयन्, जनसम्मतिपत्राधिक्येन प्रत्यर्थिनः पञ्चापि स्वयमेकाकी निर्जित्य, अनन्यलभ्यां कीर्तिं, एम्. एल्. ए. (M. L. A.) पदवीं च प्राप्तवान् । अद्य एतदीयं वचनमेव अत्रत्यानां वेदवाक् । तन्नकोपि कदापि उल्लङ्घितुं क्षमते । रिक्तानां निर्मलचित्तानां च ग्रामवासिनां सकलानामपि स्वाम्ययमेत्र । छत्रचामरादिचिन्हसहितः राजेव अयं ग्राममिमं प्रशास्ति इत्येवं चिन्तयति सति मयि, निश्शङ्कं स्वपन् सुन्दरमूर्तिः झटिति प्रतिबुद्धः शय्यायां उपविशन् सरोषं किमपि वक्तुमारभत । एतत् दृष्ट्वा विलक्षोऽहं मन्दंमन्दं शयनगृहस्थितवातायनसमीपं गत्वा इतराविदितं, गवाक्षरन्ध्रद्वारा अन्त रपश्यम् । तत्र कश्चन देवसदृशः पुरुषः सुन्दरमूर्तेः पुरस्तिष्ठन् उच्चैः जहास । सद्योजातभयाक्रान्तः सुन्दरमूर्तिः इतिकर्तव्यतामूढः सन् आत्मानं

परितः सम्यक् एकवारं दृष्ट्वा दीनस्वरेण कथञ्चिदपृच्छत् । कस्त्वं ? कथं, किमर्थमागतोसि? मां दृष्ट्वा किमर्थं हससि ? प्रत्युत्तरमलभमानः द्विगुणित-भीतिः सः पुनः पुनः तदेव आम्रे-डितं चकार, अतःपरं न किमपि वक्तुमशकत् । सुन्दरमूर्तेराशयं जानन्निव सोयं पुरुषः तं प्रति एवं अवोचत् । पुरुषः (सस्मितं) सुन्दरमूर्ते! मा भैषीः । नाहं चोरः । नापि त्वद्रिपुः । त्वच्छा-याभूतं मां "मनः" इति "मन-स्साक्षी" इति च जना वदन्ति । लोके प्रतिव्यक्ति अहं वसामि । प्राणिकृतं गुणं दोषं सत् असत् सर्वमप्यहं जानामि । मदविदितं न कोपि किमपि कर्तुं शक्नोति । केचन मूढाः सन्तमपि मां असन्त-माकलयन्तः यथेच्छमन्याय्यमाच-रन्ति । अहो वैधेयता जनानाम् । चेतनः यदाहि अधर्मं चिकीर्षति तदा प्रथममहमेव तं प्रबोधयामि, अधर्मात्तं निवर्तयितुं च प्रयते । केचिद्दुरात्मानः मां निरुन्धन्तः केनाप्युपायेन स्वाभीष्टं साध-यन्ति । एकाक्यहं किं कुर्याम् ? अहन्तु त्वन्मन एव, सत्यमेतत् । रहसि त्वया सह सम्भाषितुं मानुषरूपं त्वत्सदृशं अद्य मया-स्वीकृतम् । जीवितकाले भवता असंख्येयान्यधर्मकर्माण्यनुष्ठि - तानि । तान्यधिकृत्य भवता कदापि ईषच्चिन्तितं वा ? क्षणि-कोयं आयुःकालः । प्रथमक्षणे भाषमाणः सन् मर्त्यः द्वितीयक्षणे मृतो भवितुमप्यर्हति । अतएव प्रतिक्षणं मृत्युः भविष्यतीति ज्ञात्वा कालविलम्बं विना द्रुतं पुण्यफलदं कर्म कर्तव्यम् । तथा नकृतम् त्वया । तदा तदा प्रति-षेधे । कृतेपि मामनादृत्य भव-दनुष्ठितेषु पापकर्मसु भवत्प्रति-बोधनाय स्थालीपुलाकन्यायेन द्वित्राः वृत्तान्ताः आवेद्यन्ते, प्रथमं भवच्चरित्रवर्णनं क्रियते सावधानं श्रूयताम् ।

पञ्चविंशतिवर्षेभ्यः पूर्वं जीर्णवस्त्रः अपरिष्कृतकेशः दश-वर्षीयः बालकः कश्चित् पित्रोः बन्धोश्च अभावात् अनाथः इत-स्ततः वीथ्यां परिभ्रमन् क्षुत्पि-

पासार्तः यत्र कुत्रापि यत्किमपि कर्मकुर्वाणः शुनासाकं रात्रौ रथ्यायां शयानः कालं निनाय । सः कदाचिदट्टशालादिषु पात्रादि शोधनं कलयन्, कदाचिद्धूम-शकटालयं गत्वा आगन्तुकधनिक-शय्यापेटिकादीनि स्वयं शिरसा धरन्, कदाचन प्रथितराजकीय-पक्षसम्बन्धीनि ध्वजधारण समा-वेश सूचनापत्रदान कक्ष्यासमा-वेशनिर्वहणादीनि कार्याणि सोत्साहं अनुतिष्ठंश्च ववृधे । एवं बहूनि दिनानि व्यतीयुः । एष बालकोपि क्रमेण युवा सञ्जातः । प्रकृत्या वाचालत्वा-त्तस्य सर्वेपि जनाः तदीयां वाचं अनृतामपि सत्याममन्यन्त । स्वल्पेनैव स्वकीयेन लौकिक-ज्ञानेन दैशिकान् सकलानपि वृत्तान्तान्निश्शङ्कं स विमृशति स्म । स्वानभिलषितं यं कमपि सुशीलं प्रजानायकं प्रतिपक्षनेतारं वा निरङ्कुशं व्यनिन्दत् । अत एव राजकीयवेत्तारः स्वपक्षीय-सिद्धान्तप्रकटनाय केचन एत-दीयां वाचालतां जानन्तः तं स्वकक्ष्याप्रचारकं चक्रुः । तदा-प्रभृति दैन्यवृत्तिं तिरस्कुर्वन् सः (कक्ष्या) पक्षनेतृकृतधनसाहा-य्येन अनर्घं कञ्चुकादिकं दधार । आप्तैः पारितोषिकत्वेन दत्तां कालसूचिकां (Watch) हस्ते धरन्, नवनवानि वासना द्रव्या-ण्युपयुञ्जानः, युवतिजनचित्ता-कर्षकं आकल्पं विरचयन्, स्वयं विद्या गन्धरहितोपि, अपरिचित-राजकीयवृत्तान्तोपि विद्वद्भिः राजकीयमर्मवेदिभिः प्रमुखैः सह साटोपं संवादयामास । स्वाश्रितः पक्ष एव श्रेयान् नान्यः इति सयुक्तिकं प्रतिपादयामास । एवं स्वल्पेनैव कालेन सः राजकीय-विषयोपन्यासकः प्रवक्ता च संवृत्तः । राष्ट्रे तत्र तत्र गत्वा सार्वजनिकेषु समावेशेषु सर्व-जनाकर्षकं उपन्यसति स्म । भोक्तुं मुष्टिपरिमितं अन्नमप्य-लभमानः पूर्वं अनल्पां व्यथां योऽन्वभवत् स एवेदानीं प्रसिद्धः कश्चन राजकीयपक्षनायकः सम-पद्यत । सदा मोदकरयानेन सञ्चरन् भोजनशालासु पर-मान्नादीन्यभुङ्क्त ।

—(अनुवर्तते)

# सुभाषितानि

श्री यन्. रामनाथार्यः.

[पूर्वानुबन्धः]

अनुसरति करिकपोलं भ्रमरः श्रवणेन ताड्यमानोऽपि ।
गणयति न तिरस्कारं दानान्धविलोचनो मूर्खः ॥ ॥ ५३५ ॥

The bee hovers near the cheek of the elephant though warded off by its ears. A wicked person, blinded by arrogance, does not care for the contempt shown to him.

ऊर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः ।
कबळीकुरुते स्वस्थं विधुं दिवि विधुन्तुदः ॥ ॥ ५३६ ॥

A low minded person is always jealous of the greatness of the noble minded. The planet Rahu, devours the Moon often, who is placed in happiness in the sky.

एकस्य कर्मसंवीक्ष्य करोत्यन्योऽपि गर्हितम् ।
गतानुगतिको लोकः न लोकः पारमार्थिकः ॥ ५३७ ॥

when one commits a sinful act, others follow suit. Generally people follow the example of others without considering the truth of it.

यथैवात्मा परस्तद्वत् द्रष्टव्य स्सुखमिच्छता ।
सुखदुःखानि तुल्यानि यथात्मनि तथाऽपरे ॥ ॥ ५३८ ॥

One who would like to lead a happy life should treat others as he would treat himself. For the happiness and misery experienced by a person are similar to the same experienced by others.

न क्लेशेन विना द्रव्यं, द्रव्यहीने कुतः क्रिया ।
क्रियाहीने न धर्मस्स्यात्, धर्महीने कुतस्सुखम् ॥ ॥ ५३९ ॥

Wealth is not acquired without privation; without wealth, no good deeds can be accomplished; without good deeds no merit can be acquired; without merit where is real happiness?

सुखं वाञ्छन्ति सर्वेऽपि तच्च धर्मसमुद्भवम् ।
तस्माद्धर्मस्सदा कार्यः सर्ववर्णैः प्रयत्नतः ॥ ॥ ५४० ॥

Everyone wants to live happily; happiness is the result of righteous conduct; it follows that everyone without distiction should perform righteous actions without remiss.

पत्नीमूलं गृहं पुंसां, यदि छन्दोनुवर्तिनी ।
गृहाश्रमात्परो नाऽस्ति, यदि भार्या सदाऽनुगा ॥ ५४१ ॥

The domestic happiness of a person rests on his wife provided she acts agreeably to the wishes of her husband. The position of a house holder is the best provided the wife behaves agreeably towards her husband.

(अनुवर्तते)

# प्रजासंस्कृतपरिषत्, गुंटूरु द्वितीयवार्षिक प्रारंभोत्सवः

**श्री नेति अनन्तरामशास्त्री, एम्. ए.**

लिखितग्रन्थापेक्षया व्यवहृत शब्देनैव प्रजासु संस्कृतभाषायाः प्रचारः शीघ्रगत्या साधयितव्यः इति गुण्टूरुनगरे तत्रस्थ के. वि. के. संस्कृतकलाशाशालायां प्रजापरिषदः प्रारम्भोत्सवकाले उदीरितेषु बहुषु उपन्यासेषु पदे पदे उद्घाटितम् ।

तत्समावेशे अध्यक्षस्थानमलंकुर्वाणाः श्री चल्ला सत्यनारायणमहोदयाः संस्कृतभाषाप्रचारप्रारम्भः स्वगृहेष्वेव कर्तव्यः दैनन्दिनकार्यक्रमेषु स्वसुतादिभिस्सम्भाषणावसरेपि, संस्कृतभाषैवव्यवहर्तयाइत्युक्तवन्तः । कलाशालाध्यक्षाः श्री वै. अनन्तरामय्यमहोदया जातिसमैक्यनितान्तदोहदकारिण्याः संस्कृतभाषायाः पुनरुज्जीवनआवश्यकतामुद्घाटितवन्तः । तत्समावेशे बहवस्सभ्याः परिषदः चतुर्मुखीनं कार्यविधानमित्थं विशदी चक्रुः ।

१. संस्कृतभाषाभिज्ञानाम् विदुषां समाख्या एका व्यवस्थापयितव्या । ते परस्परं संभाषणं, उत्तरप्रत्युत्तरादिकम् संस्कृतभाषायामेव कुर्युः ।

२. कलाशालासु सुकृत संस्कृतभाषाभ्यासानाम् परस्तात्तदुपेक्षाणां न्यायवाद वैद्यादि विद्वद्वृत्त्यवलम्बिनां एकत्र संयोजनं कर्तव्यम् । साप्ताहिकगोष्ठीषु, चर्चा प्रधान कक्ष्यासु यथा ते भागस्वामिनः भवेयुः, तथा तेषां समुचितप्रोत्साहनं च कर्तव्यम् । अन्ततः ते न्यायवादादिवृत्त्यवलम्बिनः पूर्वप्राप्तभाषास्थानस्य सद्विनियोगं कुर्युः ।

३. मौलिकसंस्कृतभाषायां विद्यार्थिनः सुशिक्षितान्कर्तुं त्रैमासिकी प्रणालिका एका व्यवस्थापयितव्या । कलाशालागामिनां विद्यार्थिनां प्रतिदिनं संस्कृतभाषाबोधनं कर्तव्यम् । अन्ततः ते

संस्कृतभाषायां व्यवहरणाय पर्याप्तं ज्ञानं प्राप्य, दैनन्दिनकार्येषु तद्भाषां स्वेच्छया व्यवहर्तुं समर्था भवेयुः ।

४. उन्नतपाठशालासु, संस्कृतकलाशालासु सर्वे छात्राः पंचवर्षपर्यन्तं संस्कृतभाषाभ्यसनावसाने, तद्भाषा भाषण कुशलाः यथा भवेयुः तथा व्यवस्थाम् कर्तुं तत्तदध्यक्षानाम् अभ्यर्थना कर्तव्या ।

इत्थं तदितरविधानैश्च, परिषत्, संस्कृतभाषा अभिज्ञवर्गैर्यथाव्यवहृता भवेत् तथा कर्तुं, अस्मिन्देशे ग्रामे ग्रामे नगरे नगरे संस्कृतवाणीव्यवहारकुशलः संघः यथा प्रवृद्धो भवेत् तथा कर्तुं सर्वथा यत्नः कार्यः ।

प्रारम्भोत्सवकाले कलाशालामन्दिरं विद्वद्भिर्विद्यार्थिभिरितरनरनारीसमूहैर्निबिडीकृतम् । सर्वेपि परिषदः देशभवत्युद्दीपितकार्याचरणविषये विजयमेव ऐच्छन् । वन्दनसमर्पणेन सभापर्यवसन्ना ।

---

## पुस्तकसमीक्षा

**श्रीमहागणपतिप्रादुर्भावः (रूपकम्)**

**श्रीगोकर्णसाम्बदीक्षितविरचितम्**

**मूल्यम् रू. २–००**

श्री गोकर्णसाम्बदीक्षितमहोदयेन "श्रीमहागणपतिप्रादुर्भाव" नामकमिदं रूपकं अङ्कपञ्चकशोभितं गीर्वाणवाण्या वैभवपोषकं वाङ्मयं भूषणं संस्कृताभिमानिनां पाठकमहाशयानां करकमलयोः समर्पितमस्ति ।

अनेन रूपकेण विनायकपारम्यं प्रदर्शितं । सुश्लिष्टा सुलभा सरला च शैली । "सर्वान् वस्तमः कूपे पातनं" इति प्रयोगस्तु चिन्त्यः । प्रायशः सर्वत्र मुद्राक्षरस्खालित्यानि आपतितानि । "संवरण" पात्रप्रवेशनेन हास्यं निरूपितम् । प्रदर्शनयोग्यमिदं रूपकं निरवद्यं हृद्यं भवेदिति गैर्वाणी आशास्ते ।

"अवरः"

अतः शिव-केशवादि देववाचकानि नामानि सर्वाण्यपि तस्यैव परब्रह्मणः सगुणरूपवाचकानीत्यवधारणीयानि। मुमुक्षूणां भेदबुद्धि रत्त्याज्या, परं ब्रह्मैव ध्येयम्" इत्येव मद्वैततत्त्वं उपदिशन्नाचार्यः कतिपयकालं तत्रन्यवसत्।

ततः शिष्यकोटी समेतः शंकराचार्यः दक्षिणापथं प्रति निवृत्तः; काञ्चीपुरे स्वेनैवेतः पूर्वं स्थापितं कामकोटिपीठमागत्य द्वात्रिंशद्वत्सर परिमिते जीवितकाले समाप्ते सति कृतकृत्यतया जगद्गुरुः भौतिकदेहं परित्यज्य परब्रह्मभावं गतः।

## ३०. त्रिमूर्तिषु महान् कः?

केदारक्षेत्रे हिमपातोऽधिकः। तत्र जलमप्यतिशीतलम्। यदा शंकराचार्यः तत्राऽसीत् तदा तस्य शिष्या दुस्सहेन शैत्येन स्नानसन्ध्यादिकं निर्वर्तयितुं अपारयन्तः आचार्य मुपसंगम्य प्राहुः– "महात्मन्! अस्माभि रत्रनैव स्थातुं शक्यते; अतिशीतलप्रदेशोऽय"मिति। आचार्यः शिवं प्रार्थ्य उष्णोदकनदीं कांचित् प्रवाहयामास शिष्यक्लेशं च निवारयामास।

तस्मिन् पुण्यक्षेत्रे तपस्तप्यन्तो महर्षयो बहवः प्रत्यहं शङ्कराचार्य मुपेत्य सद्गोष्ठीं विधाय गच्छन्ति स्म। कदाचित् गोष्ठीसमये त्रिमूर्तिषु महान् कः? इति प्रश्न स्समुद्भूतः। तस्य समाधानं ब्रुवन् शङ्कराचार्यः कदाचित्साक्षात्कृतया आदिशक्त्या स्वस्मै कथितं कंचन वृत्तान्तं "श्रूयता" मिति उदाहरत्।

एकदा कलहाशिनः नारदस्य निरशनं सम्प्राप्तम् स भृशं चिन्तितः क्वचि दुपविश्य। अत्रान्तरे संयोगवशात् ब्रह्मविष्णुमहेश्वराः त्रिमूर्तयः गमनमार्गेण गच्छन्तः साक्षात्कृता नारदस्य। तत्सन्दर्शनमात्रेण, कलहप्रियस्य कलहबीज मस्फुरत्। अथ झडिति उत्थितो नारदः देवेन्द्रसभां तत्क्षण मगात्। इन्द्रेण सपर्याभिः

सभाजितः उचितासने समुपविष्टो देवर्षिः किमपि सुदीर्घं चिन्तयन्निव नाटयति स्म । इन्द्रस्त मालोक्य "देवर्षे! किमिति भवान् चिन्तामुद्रितो दृश्यते" इति अप्राक्षीत् ।

नारदः "त्रिमूर्तिषु उत्तमः कः? इति सन्दिहानः समाधानं पर्यालोचयामि । अस्यां देवसभायां कोऽपि महान् मदीयं संशयं निवारयितुं प्रभवति चेदुच्यता" मित्याह ।

नारदोक्तं श्रुत्वा कश्चिद्देवः प्राह– सृष्टे रग्राः सर्वस्या अपि चतुर्मुख एव किल विधाता; अतस्स एव महा"निति ।

अथान्यः कश्चिदुत्थाय "सृष्टिकर्तृत्वहेतोः न महत्त्वं सिद्ध्यति; किन्तु तद्रक्षणकर्तुरेव महत्त्वं; अतः स्थितिस्थापकस्य सत्त्वसमाश्रयस्य महाविष्णोरेव आधिक्य मिति जगाद । एव मपरः कश्चित् "जातं सर्वमपि यथातथं स्थितं चेत् लोको जीवराशिभिः निबिडीकृतो निरवकाशः स्यात्; अतस्तेषां लयोऽत्यन्तमपेक्ष्यते । यश्च लयकर्ता रुद्र इति स एव महान् भवितु मर्हति अन्ततो गत्वा" इत्याह ।

निमेषमात्रेण देवसभा त्रिधा विभक्ताऽसीत्; केचिद्ब्रह्माणं महान्त माहुः; अन्ये विष्णुं परं मेनिरे; अपरे तु रुद्रं उत्तमं न्यरूपयन् ।

इन्द्रः नारदं विलोक्य "ऋषिवर्य! भवदीयः संशयः यथावस्थितथिंति प्राप्तः" इत्याह ।

नारदः– "सत्यमेतत् । सभ्याः स्वीया नभिप्रायान् प्राचीकटन् । अत्र कोवाऽभिप्रायः समीचीन इति निश्चेतु मशक्तस्य मे मनः भ्रमतीव; बुद्धिभ्रंशो भवतीव च । नेदं अत्र निर्णेतुं शक्यते; मेरुपर्वते महतीं सभा मायोज्य तत्र अशेषान् देवान्, यक्षान् किन्नरान् गन्धर्वान् दैत्यान् महर्षीन् अन्यांश्च आहूय अमुं विषय मधिकृत्य विचारः कर्तव्यः । किं ब्रूषे?" इतीन्द्रं प्रत्याह ।

सोऽपि "तथैव कर्तव्य" मित्याह ।

इन्द्रः मेरुगिरौ महासभायाः व्यवस्थां कारयन्नास्त । अत्रान्तरे नारदः ब्रह्मलोकं गत्वा ब्रह्माणं प्रणम्य तत्प्रदर्शित मुचितासनमधिष्ठाय देवसभावृत्तान्तं एवं व्यजिज्ञपत्– "भगवन्! ह्यः देवसभायां त्रिमूर्तिषु महान् कः इति प्रश्ने समुत्थिते केचिद्विष्णुं अन्ये शिवं चाधिकं मत्वा वादोपवादैः कोलाहल मकुर्व"न्निति ।

ब्रह्मा– "मदीयमाधिक्यं न कोप्याह किम्? इति पप्रच्छ । नारदः– भवदीय मप्याधिक्यं कैश्चित्प्रतिपादित मेव; परन्तु श्रोतॄणां संख्या अत्यल्पाऽसीत् । एतावता न किमपि इदमित्थमिति निर्णीतम् । आगामिन्या मेकादश्यां मेरुगिरौ इन्द्रेण काचिन्महती सभा आयोजयिष्यते । तत्र निर्णेष्यते को महानिति– इति हि श्रूयते" इत्याह ।

ब्रह्माऽह– "मां विहाय कमन्यं अधिकं भावयेयु र्देवाः; पश्यामितावत्" इति ।

नारदः– "सभाया मागत्य यदि भवानुपविशेत् को भवन्तं अपलपितुं शक्नुयात्? अतोऽवश्यं भवताऽगन्तव्य" मित्यामन्त्र्य ततः प्रस्थितो वैकुण्ठमगात् ।

तत्रापि नारदः विष्णुना भुवनवृत्तान्तं परिपृष्टः देवसभावृत्तान्तं एवं न्यवेदयत् । "माधव! लोके शैवानां बाहुल्य मस्तीति भाति । ह्यः प्रवृत्तायां देवसभायां शिवकिङ्कराणां कण्ठारव एव भृशं श्रुतः" इति ।

विष्णुः "ह्यः सभायां मद्भक्ता विरलाः स्युः; तावन्मात्रेण शैवाधिक्यं जातमिति न मन्तव्य" मित्याह । नारदः– "सत्यमुक्तं । भाविन्यां सभायां अस्माभिः निजपरिवारैः सह नेतव्यः" । विष्णुः– सा सभा क्वनु प्रचलिष्यति? किं वा ममाप्याह्वानं आगमिष्यति?

R. N. 1845/60. Postal C. T. R. 11.
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.
Licensed to Post without Prepayment. LICENCE No. 57.

भारतसर्वकारेण पुरस्कृता च

गैर्वाणी

वार्षिकम् ४-००

मातृशब्देन सम्बन्धो जकारस्य तु सम्भवेत् ।
तदा तत्पदावाच्यत्वं सुतानाथस्य उच्यते ॥

(जामाता)

— ति. गो. अनन्तसुब्रह्मण्यम्, तिरुपति.

Published by Sri N. Ramanatha Aiyer B. A; B. L., Advocate
& Secretary S, B, P Sabha, Chittoor (A. P.)
Printed by Sri K. V. Raghavan, (in-charge)
at Vijaya Press, Chittoor. (A. P.) C. 1500.